# द्वितीयः परिच्छेदः

## कथावस्तुनः समीक्षणम्–

### 1. इतिवृत्तम् –

तिरुमलाम्बा ऐतिहासिककथावस्तुनि स्वकाव्यात्मककल्पनायाः समन्वयेन स्वचम्पूकाव्यस्य वरदाम्बिकापरिणयस्य कथावस्तुनः रचना कृतवती। एतस्मिन् नरसिंहस्य विजययात्रायाः अच्युतरायवरदाम्बिकयोः परिणयस्य प्रणयस्य च तथाचिनवेङ्काद्रिजन्मादेः कथा वर्णितास्ति यद्यपीयं कथा अत्यन्तसंक्षिप्ता वर्तते तथापि तिरुमलाम्बा स्वकल्पनया वर्णनशक्त्या च एतस्यां रोचकतां प्रतिपादयति तथा एतस्याः विस्तारः एकचम्पूरूपेणाकरोति। चम्प्वाः आरम्भः चन्द्रवंशावल्याः वर्णनाद् भवति। सम्राट् चन्द्रः बुधनामकं पुत्रं प्राप्तवान् यः चतुरतमः सर्वज्ञानसम्पन्नः सम्पूर्ण विद्याज्ञाता चासीत्। तस्य पुरुरवा इति नामकः पुत्रोऽभवत्, यः स्वबाहुबलेन स्वर्गलोकमपि आश्चर्यचकितं कृत्वा उर्वशीनाम्नीमप्सरसम् स्वप्रेमिकारूपे प्राप्तवान्। पुरुरवोर्वशीभ्याम् आयुः इति नामकः पुत्रोऽभवत्। आयोः नहुषः नहुषाच्च ययातिनामकः पुत्रो जातः। ययातिः स्वशौर्येण समर्थप्रशासनेन च इन्द्रमपि तिरस्कर्त्तुं समर्थः आसीत्। ययातिः तत्सदृशम् एव तुर्वसुनामकं पुत्रं प्राप्तवान् यः स्वशक्त्या स्वशासनम् शत्रुहीनम् अकार्षीत्। सम्राजः तुर्वसोः तिम्मनामकः राजकुमारोऽभवत्। राजसु तस्य स्थितिः नक्षत्रेषु चन्द्रमसः इवासीत्। सम्राट् तिम्मः देवस्या सह परिणीतः ईश्वर नामकं राजकुमारं प्राप्तवान्। ईश्वरः शक्त्यै उत्साहाय च राजसु अग्रणी आसीत्। ईश्वरबुक्कमाम्बाभ्यां नरसिंहनामकः राजकुमारः उत्पन्नः। सः

कार्तवीर्य इव एक: कुशलनेता अर्जुन इव यशस्वी भीम इव असीमबली विक्रमाङ्क इव शूरवीर: शक्तौ वीरसेन इव पृथुरिव नीतिनिपुण: युधिष्ठिर इव निर्मलहृदय: भीष्मपितामह इव दुर्लभधनुर्धर: राम इव सुन्दर: जनक इव धर्मपरायणश्चासीत्। स: सदैव विद्वद्भिरावेष्टित: आसीत् तेभ्यश्च प्रचुरमात्रया दानं ददाति स्म। स: शत्रून् विजेतुं कृष्ण इवासीत् तथा निजशासने शत्रुविहीनमकार्षीत्। स: एक: योग्यशासक:, य: शास्त्राणां सम्यक् ज्ञानेन योग्यप्रशासनेन निजबाहुबलेन च स्वशक्त्या: चतुर्दिक्षु विस्तारं कृतवान्। राज्यसिंहासनासीनानन्तरं नरसिंहेन निजसेनाया: कुशलतया सङ्गठनं कृत्वा विजयाय प्रास्थायि।

प्रथमं तावत्तेन पूर्वदिशात: स्वविजयात्रा प्रारम्भे तथा पूर्वस्थितानां समस्तराज्ञां दमनं कृत्वा तेषां राज्यानि स्वराज्ये एकीकृतानि। तदनन्तरं निजविशालसेनया सह समुद्रतटस्य यात्रां कुर्वन् स: दक्षिणं प्रति प्रस्थितवान्। तुण्डीरप्रदेशस्य पारं गत्वा स: चोलराज्यं प्राप्नोत् यत्रत्या धरणि: निजोत्तराशस्यै: धनधान्यैश्च इन्द्रस्य स्वर्गलोकमपि लज्जितं करोति स्म। तत्रत्यं शोभनभवननिर्माणं दृष्ट्वा नरसिंहेन आश्चर्यचकितोऽभवति। भूमण्डे चन्द्रस्वरुप: सम्पूर्ण भूमण्डले च विजयं प्राप्तुकाम: स: राजा स्वसेनापतीन् आज्ञापयत् यत् य: कश्चित् सैनिक: एतस्य देशस्य नागरिकेभ्यो हिंसामाश्रयिष्यति अथवा तेभ्य: कष्टं दास्यति तेन कठोरदण्डं प्राप्स्यते। ईदृशीषु विजययात्रासु संलग्न: नरसिंह: निजविशालसेनां नीत्या कावेरी नद्या: तटं प्राप्तवान्। । यद्यपि स: तस्मिन् काले शत्रुराज्ञ: राज्ये आसीत् तथापि तस्य हृदय: भयान्मुक्त: आसीत्। चोलनृपति: स्वगुप्तचरै: नरसिंहस्य आगमनसूचनां श्रुतवान् आसीत्। अत एव स: स्वविशालसेनां नीत्वा अग्रे गतवान् तथा पूर्णशक्त्योत्साहेन च नरसिंहस्य सेनासु आक्रमणं कृतवान्।

तस्मिन् समये आकाशमपि प्रकम्पमानं कुर्वन् भयङ्करध्वनिरभूत्। हस्तिपादैः अश्वखुरैश्च सन्ताडितधूलिभिः आकाशे सूर्यः आवृतः इव अभवत्। एतादृशे वातावरणे चोलनरेशस्य नरसिंहस्य च सेनयोर्मध्ये भयङ्करः युद्धः वर्तमानोऽभवत्। सैनिकानां चीत्कारेण "अग्रे सर" "अग्रे सर" इति ध्वनिभिश्च आकाशः शब्दायमान इव अभवत्। स्वविशालहस्त्यारुढ़ः नरसिंहः चोलनरेशे आक्रमणे कृतवान्। उभयोः सेनयोर्मध्ये भयङ्करः युद्धः प्रारभत्। तस्मिन् भयानके युद्धे नरसिंहः चोलनरेशस्य हस्तिमवधीत्। नरसिंहः चोलनरेशं गरुडधृत जीवितसर्प इव जीवितम् एव धृतवान्। चोलनरेशस्य बन्धतां दृष्ट्वा चोलनरेशस्य सेनायाः शक्तिः क्षीणाः सति रणभूमेः इतस्ततः गतवती। विजयश्रिया सुशोभितः नरसिंहः बहूत्सवैः चोलनरेशस्य राजधान्यां प्रविष्टवान्। नरसिंहस्य विजयं चोलनरेशस्य पराजयं श्रुत्वा मरुवानृपतेः हृदयः भीतिकम्पितोऽभवत्। परिणामतः स्वराज्यं पत्नीं शिशूश्च त्यक्त्वा ततः पलायितवान् तथा कुत्रचित् समुद्रतटे शरणे गृहीतवान्। मरुवाराज्ञः कायरतामुपहसन् नरसिंहः तस्य राजधान्यां मथुरानगरे प्राविशत् यत्र शासकैः नरसिंहाय प्रभूत धनानि अदायिषत्। ततः नरसिंहेन रामेश्वरः प्रास्थायि। रामेश्वरस्य पूजां विधाय तेन ब्राह्मणेभ्यः प्रचुरमात्रया धनमदायि। तस्य प्रदेशस्य सम्पूर्णराज्येषु विजयं प्राप्य सः श्रीरङ्गपट्टनमागच्छत्। तेन कावेरीनद्यां सैतुनिर्माणम् अकारि।

कावेरीनद्याः पारं गत्वा सः महावीरस्य राज्ये ससेनया प्राविशत्। नृपतिः महावीरः पत्निशिशुमन्त्रिसहितः नरसिंहस्य चरणयोः आपतितः अभययाचनाञ्चाकार्षीत्। एतेन नरसिंहस्य हृदयः दयाभिभूतः जातः। सः तस्मै अभयदानं कुर्वाणः तस्य राज्यं तस्मै एव समर्पयत्।

एतदनन्तरं नरसिंहः शतरंगी दुर्गं विजित्य निजविशालसेनया बन्धितराजभिश्च

सह उत्तरं प्रति प्रस्थितवान्। उत्तरे मानवदुर्गं जित्वा सः राजानं वराहपादं (बीजापूरस्य युसुफअलीशाहम्) बन्धितवान्। अनन्तरं नरसिंहः दयाभिभूतः सुल्तानम् मुमोच। सम्पूर्णशत्रुवर्गस्य दमनं कृत्वा तेषाम् राज्यानि स्वराज्ये अभिव्याप्य स्वराजधानीम् विधापुरीं प्रत्यागच्छत् तथा आरामेश्वरात् हिमालयं यावत् सम्पूर्णे भारते राज्यं कुर्वाणोऽभवत्। एकस्मिन् दिने कश्चित्पुरोहितः कस्मिंश्चित् प्रसङ्गे कस्याश्चित् कन्यायाः शीलगुणादीनां वर्णनमकृत्। नरसिंहेन तस्याः कन्यायाः विषये अधिकं ज्ञातुम् उत्सुकोऽभावि स च एतत्कार्याय पुरोहितम् प्रैषयत्। सा कन्या सूर्यवंशीयायाः रामाम्बिकायाः सुपुत्री ओम्बमाम्बा आसीत्। तस्या विधिपूर्वकं पाणिग्रहणं कृत्वा नरसिंहः जीवनं यापयन्नभवत्। किञ्चित्समयानन्तरं नरसिंहः दैवम् अच्युतं (विष्णुं) पुत्रप्राप्तये प्रार्थयत्। देवकृपया राज्ञी गर्भधारणं कृतवती। गर्भस्य अन्तमासे राज्ञया ओम्बमाम्बया स्वप्ने भगवान विष्णुरदर्शि यश्च तस्मै एकं योग्यपुत्रं प्राप्तये वरं दत्तवान्। राज्ञी ओम्बमाम्बा सत्वरमेव एकस्यपुत्रस्य जन्म अददत्। पुत्रोत्पन्नसमाचारात् नरसिंहः महतीं प्रसन्नताम् अन्वभवत् तथा च तेन कतिचनविधाः कार्यक्रमाः आयोजिताः। राजधान्यां विधापुर्याम् कतिविधानां सभानां नृत्यगीतादिगोष्ठीनामायोजनभावि। सम्पूर्णा नगरी एतस्मिन् स्ववसरे हर्षोल्लासयुता अभवत्। राज्ञा ब्राह्मणेभ्यः दीनेभ्यश्च अपारधनान्यदायि। राजा विदुषां ज्योतिर्विद्वाञ्च सभामायोज्य तस्य भविष्यविषये विचारमकारयत्। देवाच्युतस्य नाम्नि एव नवजातराजकुमारस्य अच्युतराय इति नामकरणमकारि। यदैव राजकुमारस्य विद्याप्राप्तिसमयः जातः। तदैव तेन शिक्षादीक्षयोः उत्तमः प्रबन्धः कारितः। राजकुमारः अच्युतरायः स्वप्रखरबुद्धयाः परिचयं ददन् अल्पसमये एव सम्पूर्णकलासु प्रावीण्यं प्राप्तवान् कृत्स्नविद्या च हृदयेऽकारि।

राजा नरसिंह: राजकुमारस्य ईदृश्या तीव्रबुद्धया अत्यन्तप्रसन्न आसीत्। सत्वरमेव नरसिंह: देवलोकवासी अभवत्। तस्य देवलोकगमनानन्तरम् अच्युतरायस्य महोत्सवेन राज्याभिषेकेनाभावि। नवयौवनस्य प्रस्फुटितत्वात् नृपस्य अच्युतरायस्य व्यक्तित्वं अत्यन्ततेजस्वि अभवत्। बृद्धिमन्त: तं राजनीतिगुणानां मूर्तिरूपे प्रतिपक्षिण: राजान: वीररसस्य अवताररूपे मित्राणि कामनानां सद्य:पूर्तये कल्पवृक्षरूपे प्रजा: साक्षाद्धर्मावताररूपे रक्ताधरकामिन्यश्च साक्षात्कामदेवरूपे स्वीकृतवन्त:। एवम् राजा अच्युतराय: प्राप्तयां यौवनावस्थायाम् अपर: कामदेव इवाभवत्। V-68583

एकस्मिन् दिने उद्याने भ्रमता नृपेण अच्युतरायेण कासाञ्चित् बालानां वार्तालाप: अश्रावि। तासां वार्तालापं श्रुत्वा नृप: गुप्तरूपेण मन्दिरस्य पृष्ठं गतवान् यच्च उद्याने स्थितम् आसीत्। राजा तस्मिन् कात्यायनीमन्दिरे प्राविशत्। मन्दिरे प्रविश्य नृप: कतिपयबालाभि: आवृतां सौन्दर्यस्य मूर्तिमतीं देवीं एकां कुमारीमपश्यत्। तया सूर्यवंशस्य ललामभूतया वरदाम्बिकया अभावि। या मातुरम्बिकाया: ध्याने लीना आसीत्। राजा नृप: तस्या: दिव्यं शरीरं दृष्ट्वा मन्त्रमुग्ध इवाभवत् तथाअनिमिषाक्षिभ्याम् स: राजा सौन्दर्यम् अपिवत् इव तस्य हृदयगति: अवरुद्धा इव अभूत् इन्द्रियाणि उपरतिं गतानि इव कामप्रहारेण पक्षाघात इव तत्रैव स्थाने तिष्ठन् स्थापित इव समाधौ लीन इव आनन्दस्य अचिन्त्यसागरे निमग्न इवाभूत्। राज्ञ: निर्निमीलितदृष्टिं दृष्ट्वा वरदाम्बिकाया: दासीवर्गेषु चिन्तनप्रसङ्गोऽजायत। ता: पृष्ठं गत्वा परस्परं सम्मिल्य गुप्तवार्तालापं कुर्वत्य: अवभन्। तासाम् आभूषणध्वनिना पारस्परिकवार्ताजनितकोलाहलेनापि तस्या: राजकुमार्या: साधना अविचलिताऽभवत्। यदा तया स्वसाधना समाप्ता नेत्रे च उन्मीलिते पुर: नृप: अदर्शि। य: ध्यानेन तामेव पश्यन्नासीत्। राजकुमारी वरदाम्बिकाऽपि लज्जामुक्तभावेन

राजानमद्राक्षीत्। राज्ञः अच्युतरायस्य युवाहृदयं वरदाम्बिकायाः सौन्दर्येण वेधितम् इव। वरदाम्बिकाऽपि राजानम् अच्युतरायं दृष्ट्वा तस्य रूपसौन्दर्ये मुग्धाऽभवत्। उभावपि परस्परौ बहुसमये यावत् पश्यन्तौ अभवताम्। तयोः युवचेतसोः अन्यान्यं प्रति प्रेमभावना जागृता। तस्मिन्नेव क्षणे विदूषकः आगत्य राजानमबोधयत् यत् तस्य प्रधानमन्त्री केनचित् आवश्यककार्येण एकान्ते मिलितुम् इच्छति। राजा ततः गत्वा एकान्ते निजप्रधानमन्त्रिणा विचारविमर्शं कृतवान्।

नृपः अनिच्छया राजप्रासादं प्रत्यागच्छत्। विदूषकञ्च तस्या विषये अधिकं ज्ञातुं तत्रैव वासार्थम् आदिष्टवान् स्वयञ्च तस्याः सौन्दर्यं प्रशंसन् स्वभृत्यवर्गैस्सह राजप्रासादम्प्रति आगतवान्। राजप्रासादस्य द्वारे एव स अधीनस्थान् राज्ञः मुक्त्वा स्वयम् अन्तः कक्षे गत्वा वरदाम्बिकायाः अप्रतिमसौन्दर्यस्य स्मरणं कुर्वाणः विरहव्यथितस्सन् महदुत्सुकतया विदूषकागमनस्य प्रतीक्षां कुर्वन्नभवत्। विदूषकेन आमत्य राजा प्रत्यबोधि यत् सा बाला या कात्यायनीमन्दिरे भवता अदर्शि सूर्यवंशस्य नलामभूतायाः त्र्यम्बिकायाः पुत्री वरदाम्बिका अस्ति। सा निजव्रतसाधनायै एव गौरीवनस्थितायाः मातुरम्बिकायाः तस्मिन् मन्दिरे आगतवती आसीत्। इदम् "वरप्रसाधन" नामकं व्रतम् अनुरूपवरप्राप्त्यर्थं भवति। विदूषकस्य सूचनानुसारं सा बाला राज्ञः सौन्दर्यात् अभिभूता आसीत्।

अपरत्र च राजकुमारी यदा स्वराजप्रासादमागच्छति तु सापि कामस्य तीव्रप्रहारात् आहता भवति। कामः तस्याम् अद्भुतप्रभावम् आरोपितवान् आसीत्। सा स्वसखिभिस्साकम् वार्तालापं त्यक्तवती। सा स्वभृत्यवर्गैः लेशमात्रं लज्जां न करोति स्म। अगस्त्यस्य आराधनामपि त्यक्तवती, वीणावादनमप्यज्यजत्। मृगशिशुभिस्सह वार्तामपि न करोति स्म। मयूरनर्तनं कन्याविवाहं हंसयुगलस्य एकत्रीकरणं शुकपाठ पाठनम् स्नानञ्चापि

त्यक्तवती। सा वस्त्रानपेक्षिता प्रसाधनेभ्यः घृणां कुर्वती नैरन्तर्येण च नृपं प्रत्यचिन्तयत्। नृपस्य अच्युतरायस्य नाम वारं वारं श्रोतुं सा स्वपुरस्सरं दामोदरस्य भजनं गातुं पौनः पुन्येन कथयति स्म। किन्तु पुनरपि न जाने साऽनुकूलतां न प्राप्नोति स्म। तस्याः हृदयरूपः मृगः राजानम्प्रति पलायमानः आसीत् सा वारं वारं आत्मानम् उपालम्भयति स्म यत् अहं मातुरम्बिकायाः मन्दिरं किमर्थं गतवती, किमर्थं तन्नृपं दृष्टवती, किमर्थं व्रतमेतत् आरब्धवती किमर्थं तस्मिन्नासक्तवती अभवम्। सखिभिः पृष्टे सा तासां पुरस्सरं स्वहृदयस्य वार्तां प्रस्तौति बोधयति च यत् यदारभ्य गौरीवनस्य मन्दिरेऽहं तं राजानमद्राक्षम् तदारभ्य काचित् अकथनीया इव वार्ता मम हृदये भवति तत्कारणाच्च उत्पन्नानां व्याकुलताम् अवरोधयतिुम् असमर्थास्मि। तस्याः ईदृश्या स्थित्या सर्वाः दासदास्यः चिन्तिताः अभवन्।

तस्मिन्नेव समये कञ्चुकी कानिश्चित् अन्यदासीभिस्साकम् प्राविशन् राजकुमारीञ्चाबोधयत् यत् तस्याः भ्रातृद्वयं नृपः अच्युतरायः स्वकुलपुरोहितस्य अमात्यस्य च माध्यमेन पाणिग्रहणहेतवे निवेदनं कृतवान् आसीत् यस्य स्वीकृतिः ताभ्यामदायि। एताः दासीश्च पाणिग्रहणसंस्कारार्थयोग्यप्रसाधनकारयितुमत्र प्रेषिताः। एतं समाचारं श्रुत्वा वरदाम्बिका तस्याः सरव्यश्च बहुप्रसन्नाः अभवन्। ताः वरदाम्बिकां विवाहयोग्याभूषणादिभिः सुसज्जितां कृतवत्यः। अच्युतरायोऽपि तत्र विविधोत्सवैः आगतवान् तथा विधिपूर्वकं विवाहं कृत्वा तेन वरदाम्बिकायै पट्टाभिषेकमहिषीपदं प्रादायि। तया सह विहारं कुर्वाणः अच्युतरायः सर्वविधमानन्दम् उपभुक्तवान्। किञ्चित्कालानन्तरं वेंकटपर्वतस्य विष्णुदेवस्य कृपया राज्ञी वरदाम्बिका गर्भवती अभवत्। दास्याः मुखात् एतं सुखदसमाचारं श्रुत्वा विधिना गर्भस्थशिशोः रक्षायै पुंसवत् संस्कारं

कारितवान्। एकस्मिन् दिने मङ्गलवेलायां राज्ञया: वरदाम्बिकाया: राजकुमारस्य जन्म अभवत्। पुत्रोत्पत्त्या अच्युतराय: महतीं प्रसन्नताम् अनुभूतवान्। राजा एतस्मिन् स्ववसरे विप्रेभ्य: तैरिच्छितवस्तूनि दत्तवान् पुत्रस्य जातकर्मसंस्कार: आनुवंशिकविधानं च सम्पन्नं कृतवान् यत: राजकुमार: वेंकटपर्वतदेवताया: कृपया उत्पन्नो अभवत् अतोऽच्युतरायेण तस्य नामकरणमयि चिनवेंकटाद्रि: इति कृतम्। तस्य वाल्यावस्थायामेव अच्युतराय: तस्य असाधारणप्रतिभां दृष्ट्वा स्वमन्त्रिभि: मन्त्रणां कृत्वा अल्पवयस्येव तस्मै युवराजपदम् प्रदत्तवान्। अत्रैव वरदाम्बिकापरिणयचम्प्वा: कथा समाप्ता भवति। स्वसंक्षिप्तपरिचयेन सह कवयित्री तिरुमलाम्बा एतस्य चम्पूकाव्यस्य अन्तं कृतवती।

## 2. मूलस्रोत: –

एतच्चम्पूकथाया: मूलं स्रोत: इतिहासो वर्तते। अच्युतराय: एक: ऐतिहासिको नृप: अस्ति। य: विजयनगरशासनस्य १५३० त: १५४२ ई. यावत् संचालनमकृत्[1] तस्यैव अच्युतरास्य सलगनरेशस्य सुपुत्र्या वरदाम्बिकया सह परिणय: प्रणयश्च एतस्मिञ्चम्पूकाव्ये वर्णितौ स्त:। एतां कथां तिरुमलाम्बा निजकल्पनाया सरसतासम्पन्नां कृतवती। अत: अस्माभि: कथयतुिं शक्यते यत् वरदाम्बिका परिणयस्य कथाया: मूलं स्रोत: इतिहास: वर्तते। इतिहासे अच्युतरायस्य नामोल्लेख: स्पष्टोऽस्ति यत् स: कयाचित् वरदाम्बिकानाम्न्या सह परिणयं कृतवान् भवेत्। तथा ताभ्याम् चिनवेंकटाद्रिनामक: पुत्र: उत्पन्नो अभवत्। एतच्चापि ऐतिहासिकप्रमाणै: स्पष्टम्।

---

1. N.N.Venkat Ramanappa : on-01-p-176
   Achuta Ruled from -1530-1542.

3. **मौलिकोद्भावना: –**

एतस्या: चम्प्वा: कथा ऐतिहासिकी वर्तते। कवयित्री निजकल्पनयाऽपि एतस्याम् परिवर्तनं परिवर्धनञ्चाकृत। क्रिन्त्विदम्परिवर्तनम् नाममात्रम् एव। चम्प्वा: आरम्भ: चन्द्रवंशावलीवर्णनात् भवति। चन्द्राद्बुद्ध: बुधात्पुरुरवा–पुरुरवात: आयु: आयो: नहुष: नहुषाद्ययाति: ययाते: तुर्वसु:, तुर्वसो: तिम्म: तिम्मादीश्वर: ईश्वरात् नरसिंह: नरसिंहात् अच्युतराय: अभवन्। तिम्मात्प्राक्ये नृपा: एतस्मिन् वंशे अभवन् तेषामुल्लेख: ऋग्वेदे शतपथब्राह्मणे पुराणे मनुस्मृतौ कथासरित्सागरे च मिलति।[१] अत: ते वैदिका: पौराणिकाश्च नृपा: कथयितुं शक्यन्ते।

तिम्मात् इयं वंशावली इतिहासे प्रविशति।[२] अयं वंशक्रम: एतस्यां चम्प्वां वर्णितोऽस्ति। इदानीं वयम् एतस्य क्रमस्य तुलना इतिहासवर्णितराजभि: करिष्याम:। अच्युतस्य पितामह: ईश्वर: विजयनगरस्य प्रसिद्धनृपस्य शलुवनरसिंहस्य मित्रमासीत्।

शलुव नरसिंह: १४८५ त: १४९० ई. यावत् शासनं कृतवान्। ईश्वर: नरशनायकनामकं पुत्रं प्राप्तवान् यश्च शलुवनरसिंहस्य मृत्योरनन्तरं विजयनगरस्य नायकत्वं स्वीकृतवान् यत: तस्मिन् काले शलुवनरेशस्य आत्मज: अत्यल्पवयस्क:

---

१. बुध: राजवंशीयसोमस्य ताराया: उत्पन्न: पुत्र: आसीत् बुधस्य पुत्र: पुरुरवा। ऋग्वेदे (१/३१/४) मनुना सह पुरुरवाऽपि उल्लिखितो वर्तते। शतपथब्राह्मणे २/५१ ऋग्वेदे (१०/९५) मत्स्यपुराणे भागवतपुराणे च पुरुरवोर्वश्यो: तयो: पुत्रस्य आयुषस्य च उल्लेख: मिलति। कथासरित्सागरेऽपि (लम्बकं ३ तरङ्ग ३) एतस्य उल्लेख: प्राप्यते। मनुस्मृतौ (७/४१) नहुष: आयुष: पुत्ररुपे वर्णित:। हरिवंशपुराणे (१६०४–१६१७) तुर्वसु: ययाते: पुत्ररुपे उल्लिखित:। य: देवयान्या: उत्पन्न: आसीत्। अत: तुर्वसुराज्ञां यावत् उल्लेख: भिन्नभिन्नपुराणेषु अन्यशास्त्रेषु च मिलति।

2. Vide Suryakant : Vardambika Parinayachampu : Notes-157 with timma, are Inter upon Historical Homes. Timma was the Grandfather of Narsimha and the great Grand father of Achuta, the two heroes of the Romance.

आसीत्।[1] अयमेव नरशनायक: एतस्य चम्पूकाव्यस्य नायकस्य अच्युतरायस्य पिता विद्यते। एतस्याम् चम्प्वां तस्य नाम नरसिंहमकारि। नरशनायकस्य चत्वार: पुत्रा: आसन् एक: इम्मदी नरशनायक: य: पश्चात् वीरनरसिंहनाम्ना इतिहासे प्रसिद्ध: अभवत्। द्वितीय: कृष्णदेवराय: य: विजयनगरस्य अतिप्रसिद्धराजाऽभवत्। यश्च १५०९ त: १५२९ ई. यावत् शासनं कृतवान्। तृतीय: रंग: आसीत् य: अच्युरास्याग्रज: चतुर्थश्च अच्युतराय: य: सर्वेषु अनुज:। तिरुमलाम्बयाऽत्र साधारण्येन परिवर्तनमकारि यत् केवलं नरशनायकस्य स्थाने नरसिंह इति नाम वर्तते। इतिहासस्य नरशनायक एव एतस्या: चम्प्वा: नरसिंह: अस्ति। एतस्मिन् चम्पूकाव्ये अच्युतरायस्य मातुर्नाम उम्बमाम्बा विद्यते किन्तु इतिहासे तस्या: नाम ओम्बाम्बा इति। इतिहासे चम्प्वाञ्चोभयो: अच्युतरायस्य पुत्रनाम वेंकटाद्रि: वर्तते। चम्प्वां वेंकटाद्रे: प्राक् चिनशब्दस्य प्रयोगो विद्यते।[2] षोडशशताब्द्यां चिनशब्दस्य प्रयोग: अनुजाय क्रियते स्म। इतिहासेऽपि वेंकटाद्रे: मातुर्नाम वरदाम्बिकैव मिलति।[3] एतेन सिद्धं भवति यत् नरशनायकस्य पुत्र: अच्युतराय: आसीत् य: वरदाम्बिकानाम्न्या कयाचित् राजकुमार्या सह परिणयं कृतवान् तयोश्च वेंकटाद्रिनामक: पुत्र: उत्पन्न:।

---

1. K. A. Nilkantha Sastari and G. Srinivasacharya : on it - p. 420 "Subjected the Tamil country before the died in 1491 A.D. Leaving his two Sons in Charge of Naresh Nayak the son of Taluva Isvra".
2. Vide Suryakanta : Vardambika parinaya champu: - Notes 231. The word चिन the younger and its opposite प्रौढ़ the elder,were commonly applied before the Names of Man of Vijay Nagara of the 16th century. The two brothers of the were called peda Tirumala in a Tirumala respectively.
3. Mohammad Habib and Khalif Ahmad Nisami: on it Vol. V.P. 1087. The at tempt of the queen Mother Vardambika to free her son from the .....of uncrupton brother.

यदि इतिहासस्य तथा एतस्य चम्पूकाव्यस्य कथायाः तुलनां कुर्मः तु इदं स्पष्टं भवति यत् तयोः न कश्चित् तात्विकभेदः वर्तते। कवयित्र्याः उद्देश्यम् अच्युतरायस्य परिणयवर्णनमेवासीत्। अतः सा केवलं कानिचित् नामानि परिवर्त्य अन्यानि इतिहासस्यैव पात्राणि प्रयुक्तवती। अतः कृत्स्नविश्लेषणानन्तरम् इदं सिद्धम् भवति यत् वरदाम्बिकाकथायाः मुख्याधारः इतिहास एव वर्तते। कवयित्र्याः काल्पनिकरोचकवर्णनैः एतस्यां चम्प्वां सरसतायाः समावेशोऽभवत्।

## 4. वरदाम्बिकापरिणयचम्प्वाः काव्यशास्त्रीयविश्लेषणम्—

### (i) इतिवृत्तम्—

काव्यस्य शरीरं वृत्तम्। इतिवृतञ्च द्विप्रकारकं मन्यते आधिकारिकं प्रासङ्गिकञ्च। अधिकारस्य तात्पर्यम् अस्ति फलस्य स्वामित्वम्। अधिकारी फलस्य स्वामीत्युच्यते अतः फलस्य स्वामिनः प्रधाननायकात् सम्बद्धम् इतिवृत्तम् आधिकारिकं भवति।[१] आधिकारिकेतिवृत्तातिरिक्तम् अन्येतिवृत्तम् आनुषङ्गिकम्भवति। इदञ्च वृत्तम् आधिकारिकवृत्तस्य उपकारकम्। तस्य फलाभिमुखत्वे साहाय्यं करोति। आधिकारिकेतिवृत्तस्य एतान् उपकारकेतिवृत्तान् प्रासङ्गिकवृत्तमित्युच्यते।[२]

एतत्दृष्ट्या वरदाम्बिकापरिणयस्य मुख्यस्य अथवा आधिकारिकवृत्तस्य फलाधिकारी अच्युतरायो वर्तते। वरदाम्बिकया सह तस्य परिणय एव मुख्यं फलम्। प्रासङ्गिकवृत्तम् अत्र स्पष्टं नास्ति। नरसिंहस्य वृत्तम् प्रासङ्गिकं भवितुं न शक्यते यतः

---

१. विश्वनाथविरचितं साहित्यदर्पणम् ६/४३
अधिकारः फले स्वाम्यमधिकारी च तत्प्रभुः।
तस्येतिवृत्तं कविभिरधिकारिकमुच्यते।।

२. साहित्यदर्पणम् ६/४४
अस्योपकरणार्थं तु प्रासङ्गिकमितीष्यते।

अच्युतरायस्यपितृरुपे एव तस्य वर्णनमस्ति। मुख्यफलप्राप्तये स: नायकस्य सहायको नास्ति। विदूषकस्य वृत्तं प्रासङ्गिकं भवितुं शक्यते।

यत: तत् अच्युतरायस्य फलप्राप्तये सहायकं सिद्धम्भवति। रचनादृष्ट्या इतिवृत्तं त्रिविधम्–प्रख्यातम् उत्पाद्यम् मिश्रञ्च। ऐतिहासिकम् इतिवृतं "प्रख्यातम्" कविना कल्पितम् "उत्पाद्यम" मिश्रणात् रचितम् 'मिश्रम्' वृत्तम् भवन्ति।[१] वरदाम्बिकापरिणयस्य वस्तु ऐतिहासिकत्वात् प्रख्यातम् अस्ति। कवयित्री तस्मिन् काव्यात्मक प्रसङ्गमपि योजितवती।

## (क) अर्थप्रकृतिपञ्चकम्–

अर्थप्रकृतय: प्रयोजनसिद्धे: उपाया: सन्ति।[२] अत: इमा: फलसिद्धे: साधनान्यपि कथयतिुं शक्यन्ते। बीजं विन्दु: पताका प्रकरी कार्यञ्चैतानि अर्थप्रकृतित्वेन स्वीकृतानि सन्ति।[३]

---

१. धनञ्जयविरचितम् दशरूपकम् १/१४–१५
प्रख्यातोत्पाद्यमिश्रत्वमेदात्त्रेधापि तत्त्रिधा।
प्रख्यातमितिहासादेरुत्पाद्यं कविकल्पितम्।।
मिश्रं च सङ्कारताभ्यां दिव्यमर्त्यादिभेदत:।।

२. दशरूपकस्य धनिककृता अवलोकटीका, पृ. २२
अर्थप्रकृतय: प्रयोजनसिद्धिहेतव:, साहित्यदर्पण, परिच्छेद–६ पृ. ३०८

३. नाट्यशास्त्रम् १९/२०–२१
इतिवृत्ते यथावस्था: पञ्चारम्भादिका: स्मृता:।
अर्थप्रकृतय: पञ्च तथा बीजादिका इव।
बीजं बिन्दु: पताका च प्रकरी कार्यमेव च।
अर्थप्रकृतय: पञ्च ज्ञात्वा योग्या यथाविधि।।

बीजम् इतिवृत्तस्य तत् तत्त्वम् अस्ति यत् आरम्भे अल्परुपे सङ्केतितं भवति इतिवृत्तफलस्य च कारणम्भवति। एतत् इतिवृत्ते अनेकरुपे पल्लवितं पुष्पितं च भूत्वा अन्ततः फलरुपे समाप्तम्भवति।[1]

एतस्यां चम्प्वां बीजस्य स्थितिः तदा भवति यदा अच्युतरायः ध्यानमग्नां वरदाम्बिकां पश्यति तथा प्रथमदर्शन एव उभावपि परस्परम् आकृष्टौ भवतः।[2] तस्मिन्नेव क्षणे प्रेम्णः बीजम् तयोश्चेतसोः अङ्कुरितम्भवति। इदमेव बीजम् अग्रे पल्लवितं पुष्पितञ्च भूत्वा अच्युतरायेण वरदाम्बिका प्राप्तिफलरुपे प्राप्यते।

बिन्दुनाम्नी अपरा अर्थप्रकृतिः इतिवृत्तस्य तत् तत्त्वम् अस्ति यत् तस्य कथाविच्छिन्ने अग्रांशेन योजयति, अग्रे वर्धयति च।[3] यथा तैलबिन्दः जले विस्तृतः भवति तथैव अयमपि बिन्दुः प्रसारितो जायते। अत एवायं बिन्दुरित्युच्यतो एतस्यां चम्प्वाम् राजा अच्युतरायः वरदाम्बिका च परस्परम् प्रेम कुरुतः। कस्माच्चित् आवश्यककारणवशात् अच्युतरायः स्वप्रासादं प्रत्यागच्छति। तत्र सा वरदाम्बिकायाः विरहे पीडितो भवति। वरदाम्बिकायाः चिन्ता एकम् अवान्तरवृत्तं वर्तते। इयमवस्था एकवत् न तिष्ठति, अत्र इतिवृत्तेः विच्छिन्नताप्रवृत्तेः सम्भावनाऽस्ति, किन्त्वेतस्मिन्नेव समये विदूषकः आगत्य राजानम् वरदाम्बिकायाः वंशादिविषये ज्ञापयति कथयति च सा भवतः पाणिग्रहणस्य

---

१. साहित्यदर्पणम् ६/६५–६६
अल्पमात्रं समुद्दिष्टं बहुधा यद्विसर्पति। ६५ ख
फलस्य प्रथमो हेतुर्बीजं तदभिधीयते। ६६ क

२. वरदाम्बिकापरिणय पृष्ठ १०५ पं. ४–८ निर्वर्ण्य सुचिरं स राजन्यः विस्मयविधेयतया नियन्त्रित इव नियमित इव निरभिज्ञ इव, निरर्गलरामानियोगनिघ्न इव, निश्चल ध्यानशील इव, निरवधिकानन्दानु–सन्धान इव, निरूद्धमनोवृत्तिः निष्पन्दीभवदिन्द्रियवैचक्षण्यौ निर्निमेषबीक्षणः क्षणमतिष्ठत्।

३. साहित्यदर्पणम् ६/६६ दशरूपकम् १/१७
अवान्तरार्थविच्छेदे बिन्दुरच्छेदकारणम्।। १७

सर्वथा योग्या वर्तते।[1] एतेन इतिवृत्ते विच्छिन्नतायाः सम्भावना समाप्ता भवति राजाऽच्युतरायः वरदाम्बिकाप्राप्तये उद्योगं कुर्वन् दृश्यते येन बीजम् वृद्धिशीलमिव भवति।

तृतीया अर्थप्रकृतिः पताका वर्तते। इयम् स्वस्यामेव एकम् इतिवृत्तं भवति। यस्याः प्रयोगप्रयोजनम् यद्यपि आधिकारिकमितिवृत्तं भवति तस्याः स्वफलमपि वर्तते।[2] एतस्य वृत्तस्य स्वनायकोऽपि भवति यः आधिकारिकवृत्ते बहुदूरं यावत् तिष्ठति। किन्त्वेतस्य वृत्तस्य योजना सदैव अनिवार्या न भवति। वरदाम्बिकापरिणये पताकायाः योजना कवयित्र्या नाकारि।

प्रकरीनाम्न्याः चतुर्थार्थप्रकृतेः स्वरूपमपि प्रायः पताकासमम् मिलति तत्र भिन्नता तु केवलम् एतादृशी अस्ति यत् इयम् अल्पदेशव्यापिका वर्तते एतस्य नायकस्य च न किमपि नैजम् फलम् भवति। पताकासदृशी इयमपि प्रधानफलाय सहायिका भवति। एतस्याः अपि स्व नायको भवति यस्य नैजम् फलम् न विद्यते तथा सः केवलम् आधिकारिकनायकस्य फलप्राप्तये कार्यं करोति।[3] एतस्याः योजनाऽपि अनिवार्या न भूत्वा वैकल्पिकी अस्ति। प्रकरीवृत्तरूपे वरदाम्बिकापरिणयस्य विदूषकस्य वृत्तम् स्वीकर्तुं शक्यते यच्च अल्पदेशव्यापकं वर्तते तथा केवलम् आधिकारिकनायकस्य राज्ञः अच्युतरायस्य सहायको वर्तते तथा तस्य नैजम् किमपि फलम् नास्ति।

---

१. वरदाम्बिकापरिणय पृ. ११६ पद्यम् ११९
तवैव योग्या धरणीन्द्रचन्द्र! गुणान्ववायाऽनुगुणा पुरन्ध्री।
अनुग्रहेण प्रणयेन वास्या गृहाण पाणिं किमहो विलम्बः।।

२. दशरूपकम् १/१३ प्रासङ्गिकं परार्थस्य स्वार्थो यस्य प्रसङ्गत।
साहित्यदर्पणम् ६/६७ व्यापि प्रासङ्गिकं वृत्तं पताकेत्यभिधीयते।

३. साहित्यदर्पणम् ६/६८ (ख) ६९ (क)
प्रासङ्गिकं प्रदेशस्थं चरितं प्रकरी मता।
प्रकरी नायकस्य स्यान्न स्वकीयं फलान्तरम्।।

पञ्चमं कार्यनाम्न्या: अर्थप्रकृते: फलोपायस्वीकृति: असङ्गता इव प्रतीयते, यत: कार्यम् यत् स्वयमेव फलं प्रयोजनं वा वर्तते स्वस्यैव उपायस्य अथवा सिद्धे: कथं हेतुर्भवितुं शक्नोति? एतस्य निरूपणे आचार्येषु पूर्ण: मतभेदो वर्तते। कार्यस्य तात्पर्यम् प्राय: प्राधान्येन अवस्थितं तत्साध्यं स्वीकृतम् अस्ति यस्य उद्देश्येन नायकस्य कार्याणि आरम्भानि भवन्ति यस्य सिद्धौ च नायककार्यानुष्ठानस्य समाप्ति: मन्यते। प्रधानफलोपायस्तु बीजमस्त्येव किन्तु तस्य सहायका: ये केचिदपि उपाया: सन्ति ते सर्वे कार्यरूपाण्येव। दशरूपककारेण धनञ्जयेन धर्मार्थकामरूपत्रिवर्गं कार्यत्वेनामानि, यस्य प्राप्तये नायकस्य कार्यारूपादे: चित्रणं क्रियते।

इदञ्च कार्यम् कदापि एतेषु त्रिवर्गेषु किमपि एकम् भवितुं शक्नोति कदाचित् द्वे कदाचिच्च त्रीण्यपि भवितुं शक्नुवन्ति।[1] अभिनवगुप्तस्य मते कार्यं धर्मार्थकामात्मकं त्रिवर्गेषु न भूत्वा जनपदकोषदुर्गादिसम्बद्धा: व्यापारवैचित्र्यसामादय: उपायवर्गास्यन्ति।[2] अन्तरेण एतान् उपायवर्गान् कस्यचिदपि नायकस्य महत्वाकाङ्क्षा साफल्यं न प्राप्नोति। वस्तुत: एते एव उपायवर्गा: कार्याभिधानस्य अधिकारिण: वर्तन्ते। अत: यस्योद्देश्य विशेषस्य दृष्ट्या प्रधाननायकपताकानायकप्रकरीनायकानां कार्यव्यापार: चलति तदर्थं

---

१. दशरूपकम् १/१६
कार्यं त्रिवर्गस्तच्छब्दमेकानेकानुबन्धि च।।

२. अभिनवभारती, नाट्यशास्त्रम्, v ३ पृष्ठम् १५–१६ (अध्याय: १९)
यदाधिकारीकमितिप्राज्ञै: प्रधाननायकपताकानायकप्रकरीनायकैश्चेतनरुपै: यद्वस्तु फलरूपं प्रयुज्यते सम्पाद्यते सम्पाद्यत्वेनानसन्धीयते तत्फलप्रयोजनो य: सम्पूर्णतादायी पूर्वपरिगृहीतस्ये प्रधानस्य बीजाख्योपायस्य फलम्, आरभत इत्यारम्भशब्दवाच्यो द्रव्यक्रियागुणप्रभृति: सर्वोऽर्थ: (यस्य) सहकारी (तत्) कार्यमित्युच्यते। चेतनै: कार्यते फलमिति व्युत्पत्या सम्यगिति प्रभुमन्त्रोत्साहशक्ति: त्रयसम्पन्नैरित्यर्थे:। तेनजनपरकोशदुर्गादिकव्यापारवैचित्र्यं सामाद्युपायवर्ग इत्येतत्सर्व कार्येऽन्तर्भवति। तत्र परं प्रथमपरिगृहीत: प्रधानभूतोऽभ्युपायो बीजत्वेनोक्त:।

येऽपि आवश्यकसाधनसमुदायाः सन्ति ते सर्वे कार्यरूपार्थप्रकृतौ विद्यन्ते प्रधानोपायस्तु बीजमेव किन्तु तत्सहायकाः ये केचन उपायाः वर्तन्ते ते सर्वे कार्यरूपाः एव, इत्थम् नाटककारैः बीजरूपे निक्षिप्तवृत्तविशेषस्य सफलतायै नियोजितं यदपि वृत्तवैचित्र्यम् अस्ति तत्सर्वम् कार्यरूपमेव। एतस्मिन्नाधारे वरदाम्बिकापरिणये नायकनायिकयोः प्रथमं सन्दर्शनं तथा तज्जन्याकर्षणादारभ्य परिणयं पुत्रप्राप्तिपर्यन्ताः सर्वे कार्यव्यापाराः एतस्याः अर्थप्रकृतेः अधीनाः सन्ति।

**(ख) अवस्थापञ्चकम्—**

फलकामिना जनेन आरब्धस्य कार्यस्य पञ्च अवस्थाः भवन्ति। आरम्भः यत्नः प्राप्त्याशा नियताप्तिः फलागमश्च।[1]

आरम्भः कार्यस्य साऽवस्था वर्तते यत्र कस्यचित् मुख्यफलस्य सिद्धये औत्सुक्यस्य अभिव्यक्तिर्भवति।[2] एतस्यां चम्प्वां यदाऽच्युतरायः उद्याने वरदाम्बिकाम्पश्यति तदा तस्य मनसि केयं कस्मिन् वंशे जाता किमियं पाणिग्रहणयोग्या अथवा न एवम् विधम् औत्सुक्यं तस्मिन् भवति।[3] इयमेव प्रथमा कार्यावस्था आरम्भो वर्तते। इदमेव औत्सुक्यं अग्रे यत्नरूपे परिवर्तते।

---

१. साहित्यदर्पणम् ६/७०—७१ (क)
अवस्था पञ्चकार्यस्य प्रारब्धस्य फलार्थिभिः।
आरम्भयत्नप्राप्त्याशा नियताप्तिफलागमाः।।

२. साहित्यदर्पणम् ६/७१ (ख)
भवेदारभ्य औत्सुक्यं यन्मुख्यफलसिद्धये।।

३. वरदाम्बिकापरिणयः पृ. १०४ पं. १ पृ. १०५ पं. ८।

फलप्राप्तिदशायां कृतम् सत्वरमुद्योगं यत्ननाम्नी अवस्था: भवति।[1] प्रथमावस्थायाम् उत्पन्नौत्सुकतायै नृप: उद्योगं करोति। स: विदूषकं वरदाम्बिकाया: वंशनामादिविषये ज्ञातुं नियुङ्क्ते।[2] स्वयञ्च राजप्रासादे आगच्छति। अत्र राजा स्वफलं प्रति उद्योगशील: प्रतीयते। इयमेव यत्ननाम्नी अपरा कार्यावस्था वर्तते। प्रयत्न: आरम्भनाम्न्या: कार्यावस्थाया: एव उत्तरावस्था विद्यते। उत्सुकतामात्रम् आरम्भो भवति। फलप्राप्तये च कृतायाश्चेष्टाया: समावेश: यत्नावस्थायाम् भवति।

प्राप्त्याशा सा कार्यावस्था वर्तते यत्र फलप्राप्ते: सम्भावनायां विघ्नाशङ्काकारणात् कश्चिदपि ऐकान्तिक: निश्चय: न भवितुं पारयति फलप्राप्तेश्च—सम्भावना उपायविघ्नशङ्कयो: दोलायमाना तिष्ठति।[3] एतस्याम् चम्प्वां प्राप्त्याशाया: स्थिति: इत्थं वर्तते— नृप: अच्युतराय: यदा राजप्रासादम्प्रत्यागच्छति तदा विदूषकागमनस्य प्रतीक्षां करोति। अत्र राजा वरदाम्बिकाया: विरहे पीडित: भवति।[4] सा काऽस्ति प्राप्तिर्योग्या न वेति। इयमेव प्राप्त्याशा। अत्र फलं प्रति सम्भावनाऽसम्भावने चोभे स्त:।

नियताप्ति: सा कार्यावस्था वर्तते यत्र विघ्नाभावकारणात् फलप्राप्ति: निश्चिता भवति।[5] वरदाम्बिकापरिणये एतस्या: स्थितिस्तत्र विद्यते यत्र विदूषक: राजानम् वरदाम्बिकाया: वंशादिविषये बोधयति इदमपि च कथयति यत् सा सर्वथा पाणिग्रहणयोग्या

---

१. साहित्यदर्पणम् ६/७२ (क)
प्रयत्नस्तु फलोवाप्तौ व्यापारोऽतित्वरान्वित:।

२. वरदाम्बिकापरिणय: पृ. ११० पं. १–५

३. साहित्यदर्पणम् ६/७२ (ख)
उपायापायशङ्काभ्यां प्राप्त्याशा प्राप्तिसम्भव:।

४. वरदाम्बिकापरिणय: पृ. ११४ पं. १२–१३

५. दशरूपकम् १/२१ साहित्यदर्पणम् ६/७३ (क)
उपायाभावत: प्राप्तिर्नियताप्तिस्तु निश्चिता।

विद्यते। अच्युतराय: निजपुरोहितस्यामात्यस्य च माध्यमेन वरदाम्बिकाया: भ्रातृभ्य: परिणयानुमतिमपि प्राप्नोति। अत्र फलस्य अर्थात् वरदाम्बिकाया: प्राप्ति: नियता भवति। इयमेवावस्था नियताप्ति:।

सकलफलप्राप्तौ फलागमनाम्नी अवस्था भवति।[1] नायकेन यदा स्वाभीष्टफलप्राप्यते तदा फलागम:। नृप: अच्युतराय: यदा वरदाम्बिकां प्राप्नोति स्वराजमहिषपदम् च आरोहयति।[2] तर्हि तत्र फलागमस्य स्थितिवर्तते।

(ग) **सन्धिपञ्चकम्**–

केनचित् प्रयोजनैकेन परस्परं सम्बद्धकथांशान् यदा केनचिदपरेण प्रयोजनैकेन सम्बद्धान् कुर्वन्ति तदा स: सम्बन्ध: सन्धि: कथ्यते। कविना वृत्तस्य उपस्कारस्य साधनं सन्धियोजना वर्तते।[3] सन्धिविषये दशरूपककारस्य धनञ्जयस्य आशय: अस्ति यत् पञ्चार्थप्रकृतीनां तथा पञ्चकार्यावस्थानाम् संयोगात् क्रमश: पञ्चसन्धे: रचना इत्थं वर्तते[4]–

---

१. साहित्यदर्पणम् ६/७३ (ख)
साऽवस्था फलयोग: स्याद्य: समग्रफलोदय:।।

२. वरदाम्बिकापरिणय: पृ. १२३ पद्यम् १२७
पट्टाभिषेकमहिषीपदमप्यमुष्यै
दत्त्वाधिकप्रणयदर्शितकौतुकश्री:।
क्षोणीपति: सह तयान्वभवत्समस्तान्
विख्यातरागसुभगान् विषयोपभोगान्।।

३. साहित्यदर्पणस्य सत्यव्रतसिंहकृता "शशिकला व्याख्या" पृ. ३८३

४. दशरूपकम् १/२२–२३ क
अर्थप्रकृतय: पञ्च पञ्चावस्थासमन्विता:।
यथा संख्येन जायन्ते मुखाद्या: पञ्च सन्धय:।।

| अर्थप्रकृतयः | | कार्यावस्थाः | | सन्धयः |
|---|---|---|---|---|
| बीजम् | + | आरम्भः | = | मुखम् |
| बिन्दुः | + | यत्नः | = | प्रतिमुखम् |
| पताका | + | प्राप्त्याशा | = | गर्भं |
| प्रकरी | + | नियताप्तिः | = | विमर्शः |
| कार्यम् | + | फलागमः | = | निर्वहण |

आचार्यविश्वनाथेन[१] शारदातनयेन[२] शिङ्गभूपाल[३] प्रभृतिभिः सर्वैरपि परवर्तिभिराचार्यैः प्रायः धनञ्जयधनिकयोः सिद्धान्तस्यैव अनुकरणम् अकारि, परन्त्वियं मान्यता सर्वथा दोषमुक्ता नास्ति यतः यद्यस्माभिः कार्यावस्थायोगात् सन्ध्युद्भवः स्वीक्रियेत तर्हि इतिवृत्तस्य व्यावहारिक प्रयोगे महत्काठिन्यम् उपस्थितं भविष्यति, उदाहरणार्थं धनञ्जयस्य सिद्धान्तानुसारं विमर्शसन्धिः नियताप्तेः प्रकर्याश्च संयोगात् जन्यो भवति किन्तु प्रकरी एका आनुषङ्गिक कथा अस्ति या प्रधाने अथवा आधिकारिकेतिवृत्ते उपकारार्थम् गर्भसन्धौ कुत्रचिदेन कल्पिता भवति। प्रकर्या योजना नानिवार्या अपितु वैकल्पिकी। यद्येतस्याः योजना न भवति चेत् विमर्शसन्धेः योजनाऽपि

---

१. साहित्यदर्पणम् ६/७४
यथासंख्यमवस्थाभिराभिर्योगात्तु पञ्चभिः।
पञ्चधैवेतिवृत्तस्य भागाः स्युः पञ्च सन्धयः।।

२. भावप्रकाशनम् सप्तमाधिकारः पृ. २०७ पंक्ति ९—१०

३. रसार्णवसुधाकरः ३/२६
एकैकस्यास्त्ववस्थायाः प्रकृत्या चैकयैकया।
योगः सन्धिरिति ज्ञेयो नाट्यविद्याविचक्षणैः।।

न भविष्यति। एषा एव स्थिति: पताकानाम्न्या: अर्थप्रकृते: अपि वर्तते। एतस्या अपि योजना अनिवार्या न भूत्वा वैकल्पिकी अस्ति अत: पताकाया: योजनाभावे गर्भसन्धेरुद्भव: असम्भव:। इत्थम् कार्यावस्थाणाम् तथा अर्थप्रकृतीनां संयोगात् सन्ध्युद्भवसिद्धान्त: त्रुटिपूर्णो वर्तते।[१] सन्धिविषये भरतस्य तथा अभिनवगुप्तस्य विचार एव समीचीन:। एतयो: मते सन्धिभि: विभिन्नावस्थानां कार्यव्यापाराणां योगो भवति। अभिनेयरूपके नायकादिना आरम्भादिकार्यावस्थानां उपयोगाय यावानपि उपयोगी अर्थ अथवा नाट्राशि वर्तते। स एव "सन्धि:" भवति। इमे अवयवा: परस्परं मिलन्ति। अत: एते सन्धिनाम्ना अभिहिता: भवन्ति।[२] सन्धियोजना रूपकेष्वेव भवेदेवं नास्ति, अपितु महाकाव्येष्वपि भवति।[३]

### (१) मुखसन्धि: —

मुखसन्धि: तादृश: अर्थराशिर्वर्तते येन नाटकादे: मुखदर्शनम्भवति।[४] वरदाम्बिकापरिणये एतस्य सन्धे: योजना आरम्भे न भूत्वा अत्यग्रे वर्तते—यत्र बीजनाम्नी

---

१. मानसिंह: — "भारतीय नाट्यशास्त्र में सन्धिविचार"
प्राच्य प्रज्ञा वर्षम् ७, १९७५ पृ. २०—४२

२. नाट्यदर्पणम् सं. नगेन्द्र व्याख्याकार: आचार्य विश्वेश्वर सिद्धान्त शिरोमणि: दिल्लीविश्वविद्यालय: १९६१, १/३७ विवृत्ति: पृ. ९४
"मुखस्य स्वतन्त्रस्य महावाक्यार्थस्यांशा भागा: परस्परं स्वरुपेण वाङ्गै: सन्धीयन्ते इति सन्धय: अवस्थाभि: प्रारम्भादिभिरनुगता अवस्था समाप्ती समाप्यन्ते इत्यर्थ:।"

३. साहित्यदर्पणम् षष्ठ परिच्छेदवृत्ति: पृ. ६३१
सन्ध्यङ्गानि यथालाभमत्र विधेयानि।

४. नाट्यशास्त्रम् १९/३९
यत्र बीजसमुत्पत्तिर्नानार्थरससम्भवा।
काव्ये शरीरानुगता तन्मुखं परिकीर्तितम्।।

प्रथमा अर्थप्रकृति: तथा आरम्भनाम्नी कार्यावस्था विद्येते। अच्युतरायस्य वरदाम्बिकायाश्च परस्परमाकर्षणम् तयोर्हृदययोः प्रेमबीजस्य प्रस्फुटितत्वम्[१] मुखसन्धिरस्ति।

(२) **प्रतिमुखसन्धि: –**

प्रतिमुखसन्धि: तादृश: अर्थराशिवर्तते य: मुखसन्धौ उपन्यस्तम् अर्थम् युक्तियुक्तरूपेण परिपोषयति। अथवा अत्र मुखसन्धौ निविष्टबीजस्य एतादृश: उद्भेदो वर्तते य: लक्ष्यालक्ष्यरूपयो: निवसति।[२] एतद्दृष्ट्या वरदाम्बिकापरिणये अच्युतराय वरदाम्बिकयो: प्रेमबीजदर्शनानन्तरम् राज्ञ: वरदाम्बिकाविषयिणी चिन्ता तस्या: परिचयं प्राप्तुं कात्यायनीमन्दिरे विदूषक प्रेषणम् अपरत्र वरदाम्बिकाया: अच्युतरायम्प्रति प्रेम विरहावस्था तथा सखिभि: पृष्टे इदं कथनम् यत् तस्मात् कालात् मम हृदि किमपि अकथनीयमिव भवति यस्मात् कालाद् गौरीवने मातुरम्बिकाया: मन्दिरे राजानमपश्यम्[३] अत्र बीजम् प्रस्फुटितम् इव प्रतीयते तथा उभयो: परस्परं सङ्गमस्य प्रयास: प्रचलति अतोऽत्र प्रतिमुखसन्धि:।

(३) **गर्भसन्धि: –**

गर्भसन्धौ मुखप्रतिमुखसन्ध्यो: उद्भिन्नबीजस्य ह्रास: विकासश्च साकमेव चलति।[४] धनञ्जयेन एतस्य सन्धे: लक्षणम् किञ्चित् भिन्नमेवाकारि: तन्मते यत्र

---

१. वरदाम्बिकापरिणय: पृ. १०४–१०८

२. नाट्यशास्त्रम् १९/४०
बीजस्योद्घाटनं यत्र दृष्टनष्टमिव क्वचित्।
मुखन्यस्तस्य सर्वत्र यद्वे प्रतिमुखं स्मृतम्॥
साहित्यदर्पणम् ६/७७
लक्ष्यालक्ष्य इवोद्भेदो यत्र प्रतिमुखं च तत्॥

३. वरदाम्बिकापरिणय: पृ. ११८–१२०

४. साहित्यदर्पणम् ६/७८ (ख) ७९ (क)
फलप्रधानोपायस्य प्रागुद्भिन्नस्य किञ्चन।
गर्भो यत्र समुद्भेदो ह्रासान्वेषणवान्मुहु:॥

बीजस्य दर्शनानन्तरम् अदर्शनम् भवति वारं वारं च तस्यान्वेषणम्भवेत् तत्र गर्भसन्धिर्भवति। अत्र पताकानाम्नी अर्थप्रकृतिः कुत्रचित् भवति कुत्रचित् नापि भवति। परन्तु प्राप्त्याशानाम्न्याः कार्यावस्थायाः स्थितिरनिवार्या।[१] एतस्यां चम्प्वां पताकानाम्न्याः अर्थप्रकृतेः योजना नास्ति तथाप्यत्र गर्भसन्धेर्योजना वर्तते। नृपः अच्युतरायः राजप्रासादम् आगत्य महता औत्सुक्येन विदूषकागमनस्य प्रतीक्षां करोति। औत्सुक्यस्य कारणम् अस्ति यत् किं सा बाला पाणिग्रहणयोग्या न वेति।[२] अत्र बीजस्य दर्शनमदर्शनञ्च चोभे स्तः तथा तदन्वेषणमस्ति, अतः गर्भसन्धेः स्थितिर्वर्तते।

(४) **विमर्शसन्धिः —**

इतिवृत्ते विमर्शः अवमर्शो वा सन्धिः तस्मिन्नर्थराशौ वसति यत्र गर्भसन्धौ नानाबीजार्थस्य अभिव्यक्तिः क्रोधव्यसनाभ्याम् अथवा विलोभनान्मुक्ता भवति।[३] आचार्यविश्वनाथस्य मते विमर्शसन्धौ उद्भिन्नप्रधानफलोपायः इतोऽप्यधिकः उद्भिन्नः प्रतीयते किन्तु सदैव सः शापादिबाह्यपरिस्थितिवशात् आगम्यमानविघ्नबाधाभिः सङ्घर्षं कुर्वन् दृश्यते।[४] केचिदाचार्यः अवमर्शस्य अर्थं विघ्नत्वेन स्वीकुर्वन्ति। एतस्मिन् सन्धौ

---

१. दशरूपकम् १/३६
गर्भस्तु दृष्टनष्टस्य बीजस्यान्वेषणं मुहुः।
द्वादशाङ्ग पताका स्थान्न वा स्यात्प्राप्तिसम्भवः।।

२. वरदाम्बिकापरिणयः पृ. ११०–११४

३. नाट्शास्त्रम् १९/४२
गर्भनिर्भिन्नबीजार्थो विलोभनकृतोऽपि वा।
क्रोधव्यसनयो वापिस विमर्शः इति स्मृतः।

४. साहित्यदर्पणम् ६/७९
यत्र मुख्यफलोपाय उद्भिन्नो गर्भतोऽधिकः।
६/८० सापाद्यैः सान्तरायश्च स विमर्श इति स्मृतः।।

फलप्राप्त्यर्थम् उत्पन्नेभ्यः विघ्नेभ्यः मुक्तिः प्राप्यते। एतदर्थं सहायकाः सकलकार्यव्यापाराः एतस्य अन्तरे आगच्छन्ति। उदाहरणार्थं वरदाम्बिकापरिणये विदूषकः राजानम् बोधयति यत् सा कन्या कुलीना अस्ति अतः सा भवताः पाणिग्रहणयोग्या वा[1] अत्र प्रकर्याः नियताप्तेश्च योजनाऽपि वर्तते। यद्यप्यत्र विघ्नहेतुनिबन्धनं भवति तथापि अच्युतरायः फलात् पराङ्मुखो न भवति।

## (५) निर्वहण सन्धिः —

निर्वहणसन्धिस्तत्र भवति यत्र मुखादिसन्धेः बीजसहितप्रारम्भाद्यवस्थानां नानाविधदुःखात्मकभावानाञ्च चमत्कारपूर्णम् एकम् समानयनं भवेत् यच्च फलनिष्पत्तौ सुनियोजितम् फलयोगावस्थया च व्याप्तं स्यात्।[2] यथा राज्ञा अच्युतरायेण स्वामात्यस्य पुरोहितस्य च वरदाम्बिकापाणिग्रहणहेतवे तस्याः भ्रातुस्समक्षम् प्रेषणम् तथा तद्भ्रातृणाम् स्वीकृतिः तया सह अच्युतरायस्य परिणयं यावत् सकलाः घटनाः निर्वहणसन्धौ आगच्छन्ति।[3] मुख्यं फलं वरदाम्बिकापाणिग्रहणम् वर्तते यत् अच्युतरायेण प्राप्यते इयमेव फलागमनाम्नी कार्यावस्था।

---

१. वरदाम्बिकापरिणयः पद्यम् ११९ पृ. ११६
तवैव योग्या धरणीन्द्रचन्द्र! गुणान्वयावाऽनुगुणा पुरन्ध्री।
अनुग्रहेण प्रणयेण वास्या गृहाण पाणिं किमहो विलम्बः।।

२. नाट्यशास्त्रम् १९/४३
समानयनमर्थानां मुख्यार्थानां सबीजिनाम्।
नानाभावोऽन्तराणां यद्भवेन्निर्वहणं तु तम्।।

३. वरदाम्बिकापरिणयः पृष्ठम् १२३ पद्यम् १२६–१२७
प्रविश्य तस्मिन्प्रमना नृपालस्तां राजकन्यां विधिनोपयस्य।
श्रियं पयोधेरिव शेषशायी समानयत्तां सदनं स्वकीयम्।। १२६
पट्टाभिषेकमहिषिपदमप्यमुष्यैदत्त्वाधिकप्रणयदर्शितकौतुकश्रीः।
क्षोणीपतिः सह तयान्वभवत्समस्तान् विख्यातरागसुभगान् विषयोपभोगान्।। १२७

**(ii) नामकरणम्—**

नाटकस्य नामकरणं तादृशं भवेत् येन तस्य अन्तःस्थितस्य अभिप्रायस्य प्रकाशनं स्यात्।[१] नाटिकायाः सट्टकादेश्च नाम नायिकानामानुगुणं भवितव्यम्।[२] वरदाम्बिकापरिणयः यद्यपि न कोऽपि नाटको वर्तते तथापि तन्नामकरणं तन्नियमानुसारमेव विद्यते। एतस्य नाममात्रेणैव अन्तःस्थितस्याभिप्रायस्य प्रकाशनं जायते चम्प्वाः कथायाश्चानुमानं भवति। अपरमेतस्य नामकरणं नायिकानाम्नाऽकारि।

**(iii) चम्प्वाः आरम्भः —**

संस्कृतसाहित्ये कवयः स्वरूपकाणां महाकाव्यानां चम्पू काव्यनाञ्चारम्भनाय तत्वत्रयम् आश्रयन्ति। इमानि च नमस्क्रिया आशीः वस्तुनिर्देशश्च। नमस्क्रियायाम् स्वेष्टदेवं प्रति श्रद्धाशब्दैः नमस्कारैश्च काव्यारम्भो जायते। आशिषि दृष्टारं पाठकं प्रति वा आशीर्वादात्मकशब्दैः काव्यम् आरभ्यते वस्तुनिर्देशे च काव्यारम्भः कथावस्तुनः संक्षिप्तपरिचयाद्भवति। तिरुमलाम्बया प्रथमा पद्धतिराश्रीयते। यद्यपि सा स्वचम्प्वाः आरम्भे कस्यचिदपि इष्टदेवस्य स्तुतिं न कृतवती तथा चम्प्वाः आरम्भः अस्तीत्यनेन कृतः तथापि अस्तीतिपदे 'अ' इति विष्णवे प्रयुक्तम् अभवत्। कालिदासेनापि स्वप्रसिद्धमहाकाव्यस्य कुमारसंभवस्य आरम्भोऽपि एतयैव पद्धत्याऽकारि।[३]

---

१. साहित्यदर्पणम् ६/१४२
नाम कार्यं नाटकस्य गर्भितार्थप्रकाशकम्।

२. साहित्यदर्पणम् ६/१४३
नायिकानायकाख्यानात्संज्ञा प्रकरणादिषु।

३. कुमारसम्भवम्

*अस्त्युत्तरस्यां दिशि देवतात्मा*
हिमालयो नाम नगाधिराजः।
पूर्वापरौ तोयनिधी वगाह्य
स्थितिः पृथिव्या इव मानदण्डः।।

**(iv) काव्यरूढ़य: —**

स्वकाव्यकथायां काव्यरूढ़िप्रयोग: संस्कृतकवीनां वैशिष्ट्यम् वर्तते। तिरुमलाम्बाया: कालपर्यन्तं काव्यक्षेत्रे नाना काव्यरूढ़य: स्थिर: आसन्। तिरुमलाम्बया आश्रिता: काव्यरूढ़य: निम्नलिखिता:—

**(१) देवविशेषात् पुत्रप्रार्थना—**

काव्येषु प्राय: इदं दृश्यते यत् विवाहानन्तरं यदा सुदीर्घकालपर्यन्तं कोऽपि नृपादि: सन्तानहीन: तिष्ठति तु स: स्वेष्टदेवं पुत्रार्थं प्रार्थयति। इयं च प्राय: रूढ़िरभवत् वरदाम्बिकापरिणये नरसिंह: स्वेष्टदेवम् अच्युतं (विष्णुं) पुत्राय प्रार्थयति। पुत्रप्राप्तौ च श्रद्धावशात् देवस्य अच्युतस्य नाम्नि एव स्वपुत्रस्य नाम अच्युत इति कृतम्।[१]

**(२) अद्भुतस्वप्नम्—**

प्राय: इत्थं वर्णनं प्राप्यते यत् कस्यचिन्महापुरुषस्य जन्मन: प्राक् तस्य मातापितरौ किमपि अद्भुतं स्वप्नम्पश्यत:। संस्कृतकवय: रूढ़ितया एतादृशानां स्वप्नानां आश्रयणं कृतवन्त:। प्रस्तुतचम्प्वा: कवयित्री तिरुमलाम्बाऽपि एतां रूढ़िन् आश्रितवती। नरसिंहस्य आपन्नसत्वा पत्नी ओम्बमाम्बा गर्भस्थ अन्ते मासे स्वप्नेविष्णो: साक्षात्कारं करोति य: तस्यै योग्यपुत्रप्राप्ते: वरं ददाति।

---

१. एवमेव वाणविरचितकादम्बर्यां नृप: तारापीड: सन्तानं न प्राप्नोति तर्हि तारापीड: विलासवर्ती गुरवे भक्तिभाववृद्धयर्थम् तथा ऋषीन् देवांश्च पूजयितुं प्रेरयति।

सोमदेवविरचितस्य कथासरित्सागरस्य दशमलम्बकस्य तृतीये तरङ्गे रत्नाकरनामकस्य नगरस्य नृप: पुत्राभावे महादेवस्य तपस्यां करोति। तस्य कठोरतपसा सन्तुष्टस्य महादेवस्य कृपया तेन पुत्ररत्नम् प्राप्यते।

कालिदासकृते रघुवंशे राजा दिलीप: यदा बहुकालं यावत् निस्सन्तान: भवति तर्हि स्वपत्न्या सुदक्षिण्या सह कुलगुरो: वशिष्ठस्य आश्रमं गत्वा कामधेनुं सेवन्ते।

एतस्य किञ्चिद्दिनानन्तरम् ओम्बमाम्बा एकं पुत्रं उत्पादयति।[1] यस्य अच्युतराय इति नामकरणं क्रियते।

**(३) प्रथमदर्शने प्रेम–**

इयम् अतीव प्रसिद्धा काव्यरूढ़िर्वर्तते। कविभि: महदुत्साहेन एतस्या: प्रयोगमकारि। प्राय: एवं दृश्यते यत् यदैव नायकस्य नायिकाया: वा प्रथम: साक्षात्कारो भवति तदैव परस्परम् अनुरक्तौ भवत: प्रीतिं च कुरुत:। वरदाम्बिकापरिणये अच्युतराय: यदा गौरीवनास्थिते मातुरम्बिका मन्दिरे ध्यानमग्नां वरदाम्बिकां पश्यति तु प्रथमदर्शनेन एव स: वरदाम्बिकायाम् अनुरक्तो भवति।

---

१. यथा प्रसिद्धमस्ति यत् सिद्धार्थस्य जन्मन: प्राक् तस्य मात्रा मायया एकम् अद्भुतस्वप्नम् अदर्शि यत्र सा निजशरीरे प्रविशन्तं शुभ्रगजम् अपश्यत्।

कथासरित्सागरस्य दशमलम्बकस्य तृतीयतरङ्गे नृपस्य ज्योतिष्प्रभस्य गर्भवती राज्ञी स्वप्ने निजमुखे प्रविशन्तं चन्द्रमसम् अपश्यत्। कथासरित्सागरे एव वत्सराज: वासवदत्ता च एकं स्वप्नम् अपश्यताम् यत्र तस्य शिवदर्शनमभूत् शिवश्च ताभ्याम् एकस्य योग्यपुत्रस्य जन्म दातुं वरं प्रदत्तवान्।

वाणविरचितस्य हर्षचरितस्य चतुर्थोल्लासे राज्यवर्धनस्य हर्षवर्धनस्य राज्यश्रियश्च जन्मन: प्राक् तेषां माता यशोमती स्वप्ने सूर्यमण्डलान्निस्सृत्य कन्यया अनुगम्यमानायां पृथिव्यां अवतरन्तं कुमारद्वयं शस्त्रेण विदीर्य निजोदरे प्रविशन्ताम् अपश्यत्।

कादम्बर्यां नृप: चन्द्रापीड: स्वप्ने स्वराज्ञया: विलासवत्या: मुखे प्रविशन्तं चन्द्रमसम् अद्राक्षीत् इतोऽपि तस्य मन्त्री शुकनास: स्वप्ने स्वपत्न्या: मनोरमाया: अङ्के पुण्डरीकं समर्पयन्तम् एकं ब्राह्मणम् अपश्यत्। कतिपयदिवसानन्तरं नृप: मन्त्री च उभौ पुत्ररत्नं प्राप्नुत:।

वरदाम्बिकाऽपि प्रथमदर्शने एव नृपम् अच्युतरायम् वाञ्छति।[1]

### (४) विरहपीडनम्–

कामस्य प्रथमः प्रहारः अतीव पीडादायको भवति। संस्कृत कवयः नायकनायिकयोः विरहावस्थायाः चित्रणं महताऽभिरुचिना अकार्षुः। इदञ्च कविभ्यः रूढ़िसदृशं जातम्। तिरुमलाम्बाऽपि वरदाम्बिकापरिणये वरदाम्बिकायाः अच्युतरायस्य च विरहावस्थायाः चित्रणं महता रुचिना अकार्षीत्। अच्युतरायः वरदाम्बिकाविरहे खिन्नमनसा राजप्रासादं प्रविशति तत्र तस्मै न किमपि वस्तु रुचिकरं भवति। वरदाम्बिकायै कामस्य प्रथमः प्रहारः महदुःखदायी सिद्धो जायते। सा अच्युतरायस्य विरहे एतावान् व्याकुलो भवति यत् स्नानादिकम् नित्यकर्मापि न करोति सखीभिस्साकम् वार्तादिकमपि तस्मै न रोचते। सा पुत्तलिकाभिः सह परिणयं पक्षिभिस्सह क्रीडनं वार्तादिकम् चापि न करोति।

---

१. संस्कृतसाहित्ये इयं काव्यरूढ़िः कविभ्यः अत्यधिकम्प्रियं अस्ति। कादम्बर्यां चन्द्रापीडस्य कादम्बर्याश्च प्रथमदर्शने एव प्रीतिर्जायते।

कथासरित्सागरे मकरन्दिका सोमप्रभं दृष्ट्वा तस्मिन्ननुरक्ता भवति, सोमप्रभश्चापि मकरन्दिकां प्रथमसाक्षात्कारे एव वाञ्छति। कालिदासस्य अभिज्ञानशाकुन्तले नाटके राजा दुष्यन्तः शकुन्तला च प्रथमक्षणे एव परस्परं प्रीतिं कुरुतः।

विक्रमोर्वशीये पुरुरवा उर्वशी चापि प्रथमसाक्षात्कारे एव परस्परौ आकृष्टौ भवतः अन्योन्यं प्रीतिञ्चकरोति।

एवमेव हर्षदेवस्य प्रसिद्धनाटिकायां रत्नावल्यां सागरिकापूजनार्थम् आगतं नृपम् उदयनं दृष्ट्वा अनुरक्ता भवति उदयनोऽपि प्रीतिं करोति।

तस्यैव नागानन्दस्य प्रथमेऽङ्के जीमूतवाहनस्य मलयवत्याश्च यदा प्रथमः साक्षात्कारो जायते तदा तौ अन्योऽन्यं प्रीतिं कुरुतः।

नूतनवस्त्रधारणम् आभूषणग्रहणादीनि अपि त्यजति।[1]

## (५) युद्धवर्णनम्–

युद्धवर्णनमपि संस्कृतकविषु रूढ़िरिव प्राचलत्। संस्कृतकविषु बहवः प्रायः युद्धवर्णने महद्रुचिं प्रादर्शयन्। ते युद्धस्य वास्तविकरूपस्यस्वलेखन्या चित्रणं कृत्वा निजतथ्यपरायणतायाः परिचयं प्रदत्तवन्तः। प्रवृत्तिरियं संस्कृतस्य आप्राचीनकविभ्यः तिरुमलाम्बां यावत् समाना एव अस्ति। तिरुमलाम्बाऽपि महता उत्साहेन युद्धवर्णनस्य चित्रणमकार्षीत्।

इदञ्च युद्धम् नरसिंहचोलयोर्मध्ये भवति।[2]

---

१. एवमेव कथासरित्सागरे गते सोमप्रभे मकरन्दिका एतावती विरहातुरा भवति यत् तस्याः मनः नोद्याने न सङ्गीते न च सखीनां हास्ययुक्तवार्तासु एव लगति। पक्षीणाम् विनोदयुक्ताः वाण्यः अवि तस्यै न रोचन्ते। न केवलम् आभूषणधारणेऽरुचिरपितु भोजनमपि त्यजति।

अभिज्ञानशाकुन्तलस्य तृतीयाङ्के शकुन्तला दुष्यन्तस्य विरहे अतीव व्यथिता भवति।

श्रीहर्षस्य नैषधीयचरितस्य चतुर्थसर्गे दमयन्त्याः विरहावस्थाऽपि एतादृशी एव वर्तते। सा राज्ञः नलस्य विरहे पीडिता भवति।

हर्षदेवस्य नागानन्दस्य द्वितीयाङ्के मलयवती पीडिता वर्णिता वर्तते। रत्नावल्याः द्वितीयाङ्के वत्सराजाय उदयनाय विरहसन्तप्तां सागरिकाम् अदर्शयत्।

कादम्बर्यां पुण्डरीकः महाश्वेता च तथा चन्द्रापीडः कादम्बरी च अन्योऽन्यविरहे पीडिताः भवन्ति। अतः विरहावस्थावर्णनम् कविषु रूढ़िरिव प्राचलत्।

२. एवमेव कालिदासकृतरघुवंशस्य तृतीये सर्गे रघ्विन्द्रयोः, विक्रमोर्वशीयस्य प्रथमेऽङ्के पुरुरवाराक्षसयोश्च युद्धं वर्णितं विद्यते। भारवेः किरातार्जुनीयस्य चतुर्दशतः अष्टादशसर्गं यावत् अर्जुनस्य पूर्वं शिवस्य सेनाभिस्सह पुनश्च शिवेन सह युद्धं वर्णितं विद्यते। वेणीसंहारेऽपि युद्धस्य वर्णनं मिलति। भवभूतेः महावीरचरिते रामस्य पूर्वं परशुरामेण पुनश्च रावणेन सह युद्धस्य वर्णनं वर्तते।

मालतीमाधवस्य अष्टमेऽङ्के मकरन्दमाधवयोः युद्धं वर्णितम् अस्ति। उत्तररामचरितस्य पञ्चमेऽङ्के लवस्य चन्द्रकेतुसेनाभिस्सह पुनश्च चन्द्रकेतुना युद्धस्य वर्णनम् विद्यते।

माघस्य शिशुपालवधस्य अष्टादशसर्गतः विंशतितमं सर्गं यावत् शिशुपालकृष्णयोः युद्धस्य वर्णनं विद्यते।

5. **वर्णनपद्धतय: –**

काव्यस्य वर्णने मुख्यत: त्रय: विधय: सन्ति–वर्णनम् दृश्यं सारञ्च।[1] यत्र कवि: एतत् वर्णयितुं तत्परो भवति यत् कथासम्बद्धे जगति स: किम् किम् अपश्यत् तत्र वर्णनविधे: प्रयोगो भवति। एतेनं कथाप्रवाहे व्यवधानन्तु उपस्थितं भवति किन्तु साकमेव काव्ये सरसत्वमपि आगच्छति। एतत् तु कवौ एव आश्रितं भवति यत् स: यत्किञ्चिदप्यपश्यत् अकल्पयच्च तस्य चित्रणं स: कथं करोति। अत्र कवे: काव्यप्रतिभाया: ज्ञानं भवति।

कवि: यदि कस्याश्चित् विशिष्टघटनाया: दृश्यस्य वा चित्रणं करोति तु तत् दृश्यम् अभिधीयते। एतेन कथाप्रवाहे किञ्चिद् व्यवधानन्तु आगच्छति किन्तु तत् सीमितम् एव। यदा कथाप्रवाह: तीव्रगत्या चलति तदैव कवेरिच्छा कस्यचित् दृश्यस्य वर्णनं प्रस्तोतुं भवति तथा स: सन्ध्यादीनां वर्णनम् प्रारभते। दृश्यवर्णनयो: अल्प एव भेदो वर्तते।

वर्णनस्य रूपम् विस्तृतं वर्तते एतस्मिंश्च विशेषाय एतावद्बलं न दीयते किन्तु दृश्यस्य रूप वर्णनापेक्षया संक्षिप्तम् अस्ति एतस्मिन् च विशेषाय बलं दीयते। नदीपर्वतप्रदेशादे: चित्रणं वर्णने आगच्छति किन्तु सन्ध्यासूर्यादिदृश्यानां चित्रणं दृश्ये आगच्छति। सारञ्च एताभ्यां भिन्नम् वर्तते। एतस्मिन् कस्यचिदपि प्रसङ्गस्य सारतया वर्णनं जायते न तु विस्तरेण।

---

1. Maan Singh : Subandhu and Dandin, p. 147

## 6. तिरुमलाम्बया आश्रिताः वर्णनपद्धतयः —

तिरुमलाम्बा स्ववरदाम्बिकापरिणये एताः तिस्रोऽपि पद्धतीः यथावसरं विषयघटनानुकूलञ्चाश्रितवती।

### (i) वर्णनम्—

तिरुमलाम्बा वर्णननाम्न्याः पद्धत्याः प्रयोगं सापेक्ष्यम् भूयोऽकार्षीत्। एतस्याश्च योजनायाम् सा प्रभूतसाफल्यं प्राप्तवती—व्ररदाम्बिकायाः वर्णनम् अतिसरसं हृदयग्राहि च वर्तते। उदाहरणतया निम्नवर्णनम् द्रष्टव्यम्—

**प्राङ्गणरिङ्गणनिपुणविहङ्गेशरथनताङ्गीप्रतिफलदङ्गपिशङ्गिमशङ्कनीयेन गतिप्रसरप्रतीप श्रवणोपरि समुपेतकोपोदयनिरुपणे येन शोणिम्ना, सुपर्वाधिपकुमारसुरभिचापमुखाधिरुप— विजयप्रशंसिनासावंशध्वदण्डसङ्गतकौशेयपताकासंशयकरेण, सन्ततसन्निहितनिजनन्दिनी— सन्दर्शनागतदुग्धसिन्धुसगन्धेन, निखिलकञ्जमुखीजननयनजीवंजीवरञ्जिनीकौमुदीपुञ्ज— मञ्जिमव्यञ्जकेन धवलिम्ना सन्ततध्यानसन्दर्शनवशपुरःसन्निहितपन्नगरिपुरथस्थिर— प्रतिबिम्बकान्तिसम्भावनीयेन, विजृम्भितस्वाभाविकप्रभासुधामहाम्भोधिमध्यनिष्पन्दनिलीन— करुणारसवर्षामोघनीलमेघपृथुकश्लाघनीयेन कनीनिका—कलिम्ना—अत्यन्तगम्भीर— कान्तिपारावारकृतावतरणशोणनदभागीरथीतरणिकुमारिकाचातुरीम् ऊरीकुर्वाणम्, परधरणीश्वराणाम् ऐश्वर्यनिर्माणस्थिरीकरणसंहरणानुगुणगुणत्रयमिव प्रकाशयद् आश्रितवर्गसमासादितानुमोदप्रसादगुणम्, अखिलानन्दसन्दायकम् अङ्गनाजनानुरागसागर— सुधाकरो वदनराजबिम्बपूजाराजीवकान्तिसमुत्तेजकम्, अराजत लोचनयुगम्।**

(वरदाम्बिकापरिणयः पृ. ७९—पं. ३ पृ. ८०, पं. ७)

अत्र अच्युतरायस्य नयनयुगलस्य अतिसरसं सुन्दरं विस्तृतञ्च वर्णनम् वर्तते। इतोऽपि वरदाम्बिकापरिणये तुण्डीरदेशस्य[1] कावेरीनद्याः युद्धस्य अच्युतरायस्य दहसौष्ठवस्य[2] वसन्तादेश्च वर्णनम् सरसम् हृदयग्राहि च वर्तते।

**(ii) दृश्यम्—**

दृश्यस्य योजना वरदाम्बिकापरिणयस्य निम्नपङ्क्तिषु वर्तते—

**हस्तेन हस्तमवकृष्य रदौ रदाभ्यां**

**संघट्य निष्ठुरहतिस्फुरितस्फुलिङ्गम्।**

**घण्टानिनादमुखरौ करिणौ तदीयौ**

**चण्डाहववक्रमचमत्करणं व्यधत्ताम्।।**

**घणघणनिक्कणत्कनकघण्टमकुण्ठपद**

**क्रममयतस्तदीयकरिणः पृथुकुम्भतटे।**

**गुह इव क्रौञ्चशैलभुवि शक्तिमति त्वरया**

**व्यमुचत कुन्तमन्तिकचरान्तकमान्तरगम्।।**

(वरदाम्बिकापरिणयः पद्यम् ४३–४४ पृ. ४९–५०)

तस्य नृपद्वयस्य घण्टानिनादैः मुखरितम् गजद्वयम् अन्योन्यस्य करम् करेण आकर्षयन् दन्तान् च दन्तैः आहत्य येन तयोः निष्ठुराघातेन अग्निकणाः निर्गच्छन्त आसन्, प्रचण्डां युद्धगतिं धारितवन्तौ।

---

१. वरदाम्बिकापरिणयः पृ. १५ पं. ५, पृ. २० पं. ८।

२. वरदाम्बिकापरिणयः पृ. ७३ पं. ५, पृ. ८२ पं. १०।

यथा गुहः शक्त्याः मोचनं क्रौञ्चपर्वतं प्रति कृतवान् तथैव सः (नरसिंहः) (चोलनरेशस्य) निर्बाधगत्या अग्रेसरन्तं कनकघण्टैः घणघणनादकुर्वतः गजस्य विस्तीर्णकुम्भस्थलं प्रति त्वरया निजकुन्तस्य मोचनं कृतवान्।

अत्र परस्परं युद्धकुर्वतोः नरसिंहचोलनरेशयोः गजानाम् दृश्यम् वर्णितं विद्यते, तथा च नरसिंहेन कथं चोलनरेशस्य गजकुम्भस्थलेषु आघातः क्रियते, एतस्यापि दृश्यं वर्णितम्।

एवमेव निम्नपङ्क्तिष्वपि–

**तदा कुन्तसन्ताडनच्छिद्रितहस्तिमस्तकोदित्वरीसमौक्तिकरक्तझरीतारानुबन्धिनी सन्ध्यैव चोलेन्द्रभुजप्रतापगभस्तिम–दस्तमयसमयं स्वयमनक्षरमाचचक्षे। तदा किञ्चिदाकुञ्चितजानुयुगम् अचलचलपुष्करम् अनुन्मीलितलोचनम् अनवगताङ्कुशसूचनम्, अंसकभवनमयति हस्तिपतावपरावतारनरसिंहो नरसिंहः भूपालश्चोलेन्द्रं कञ्चुकिनमिव वैनतेयः कुञ्जरमिव पञ्चमुखः सारङ्गमिव चित्राङ्गो जीवग्राहं जग्राह।**

(वरदाम्बिकापरिणयः पृ. ५०, पं. ३–८)

अत्र म्रियमाणाः चोलनरेशस्य गजाः तथा नरसिंहेण जीवितस्य चोलनरेशस्य धृतेः मार्मिकं दृश्यम् वर्णितम्। एतदतिरिच्य नरसिंहस्य चोलपूरीप्रवेश[१] अच्युतरायस्य अश्वारोहणम्[२] कुसुमचयनम्[३] सलिलक्रीडादिदृश्यान्यपि[४] अतिरोचकानि सन्ति।

---

१. वरदाम्बिकापरिणयः पृ. ५१ पं. ३ पृ. ५२ पं. ३ यावत्।
२. वरदाम्बिकापरिणयः पृ. ८९ पं. ३ पृ. ९० पं. ३ यावत्।
३. वरदाम्बिकापरिणयः पृ. १३४ पं. ५ पृ. ९० पं. ३ यावत्।
४. वरदाम्बिकापरिणयः पृ. १३७ पं. ९ पृ. १४२ पं. ६ यावत्।

**(iii) सारः –**

सारे कथाप्रवाहः तीव्रगत्या चलति एतस्मिन् न कमपि व्यवधानम् उपस्थाप्य घटनानां संक्षेपेण परिचयं कारयन् कथाम् अग्रे सारयति। वरदाम्बिकापरिणयेऽपि एतादृशानि स्थलानि न न्यूनानि।

उदाहरणार्थम्–

**समस्तभुवनसाम्राज्यलक्ष्मीस्वयंवरपतिनरसिंहनृपालकुमारेण अच्युतमहारायेण अत्र भवतीं प्रार्थयमानेन सामात्यपुरोहितमुखानुयुक्तौ तव भ्रातरौ सादरान्तरङ्गव्यञ्जकमुखप्रसादभङ्गिकं तथेत्यङ्गीकृत्य तदात्व एव प्रशस्तमुहूर्ततया प्राहिणुतां भवतीं प्रसाधयितुमेताः सपुरन्ध्रीः सैरन्ध्रीस्तदत्र भवती सत्वरमुद्युङ्क्तां प्रसाधनाय।**

(वरदाम्बिकापरिणयः पृ. १२१ पं. ३–७)

भवत्याः भ्रातृद्वयेन सकलभुवनसाम्राज्यलक्ष्म्याः स्वयंवरपतिनरसिंहस्य सुतस्य अच्युतरायस्य मन्त्रिभिः पुरोहितेन च भवतः पाणिग्रहणहेतवे कृतायां प्रार्थनायाम् तदर्थम् अनुमतिरदायि तथा स्वमुखप्रसन्नतायाः माध्यमेन एतं सम्मानं प्राशंसि तथा सद्यः शुभमुहूर्तकारणात् एताः सपुरन्ध्रः सैरन्ध्रः भवत्याः प्रसाधनाय प्रेषिताः। भवती अविलम्बेन प्रसाधनाय उद्युङ्क्ताम्।

अत्र कथाप्रवाहः तीव्रगत्या चलति। अच्युतरायेण मन्त्रिणः पुरोहितांश्च वरदाम्बिकाभ्रातृपार्श्वे प्रेषणम्। ताभ्याम् (वरदाम्बिकायाः भ्रातृभ्याम्) वरदाम्बिकापाणिग्रहणाय प्रस्तावस्य स्वीकृतिप्रदानम् प्रशस्तमुहूर्तदर्शनम् इत्याद्यः घटनाः निर्विघ्नेन वर्णिताः। अतोऽत्र सारयोजना वर्तते।

(iv) **कथावर्णनपद्धतयः –**

कथावर्णनस्य मुख्यतः तिस्रः पद्धत्यः वर्तन्ते—साक्षात् (Direct) आत्मचरितात्मिका (Autobiographical) तथा लेख्यः[१] (Docueentary)। एतासु प्रथमसाक्षात्पद्धतौ कविः एकः इतिहासकार इव बहिस्तात् कथायाः वर्णनं करोति, आत्मचरितात्मकपद्धतौ कविः उत्तमपुरुषे कथां रचयति स्वयं च तत्कथायाः योग्यो भूत्वा निजकाल्पनिककथाम् अस्माकं समक्षम् प्रस्तौति। किन्तु लेख्यपद्धतौ सः दैनन्दिनिमाध्यमेन कथां प्रस्तौति।[२]

कवयित्र्या तिरुमलाम्बया वरदाम्बिकापरिणयस्य कथा साक्षात्पद्धतिमाध्यमेन प्रास्तावि। कवयित्र्या आत्मानं चम्पूपात्रं न मत्वा इतिहासकार इव बहिस्तात् एव कथा अवर्णि। आत्मचरितात्मकलेख्यपद्धत्योः कवयित्री कुत्रचिदपि आश्रेयं न गृहीतवती।

---

1. Maan Singh : Subandhu and Dandin, p. 151.
2. W. H. Hudson : An Introduction to the study of literature. p. 143.



